# आशा-द्विशती

(मुक्तककाव्यम्)

प्रणेता
रमाकान्त शुक्लः



देववाणी-परिषद्, दिल्ली

देववाणी-परिषद्, ग्रन्थांकः - ११९

# आशा-द्विशती

(मुक्तककाव्यम्)

प्रणेता
रमाकान्त शुक्लः



देववाणी-परिषद्, दिल्ली
६, वाणी-विहारः, नयी दिल्ली-११००५९
(भारतम्)

# आशा-द्विशती : मुक्तककाव्यम्


प्रणेता : शुक्लः रमाकान्तः

प्रकाशक: : देववाणी-परिषद्, दिल्ली
आर-६, वाणी विहारः,
नयी दिल्ली-११००५९ (भारतम्)

मुद्रक: : मयूर एण्टरप्राइज़ेज़,
डब्ल्यू ज़ेड-३, तिहाड़ गाँव,
नई दिल्ली-११००१८

संस्करणम् : प्रथमम्, २०१२ ई०

मूल्यम् : द्विशतं रूप्यकाणि (रु० २००.००)







ISBN - 978-81-85924-12-0


# ĀŚĀ - DVIŚATĪ : SANSKRIT POETRY


**Author** : Shukla. Rama Kant

**Publisher** : Devavani Parishad. Delhi
R-6. Vani Vihar. New Delhi-110059
(India). Phone : 011-28561846

**Printer** : Mayur Enterprises.
WZ-3. Tihar Village.
New Delhi-110018

**Edition** : First 2012

**Price** : Rupees Two Hundred only Rs.200.00

# प्रास्ताविकम्

देववाणी-परिषदः एकोनविंशत्युत्तरैकशतग्रन्थरूपेण आशाद्विशती प्रकाश्यते।

आशा वरेण्यो मनोभावः। आशां कश्चित् परमं दुःखं मनुते कश्चित्तां बलवतीं मनुते। कविकुलगुरुणा कालिदासेन मेघदूते आशाया महत्त्वमित्थं प्रतिपादितम्। भर्तृहरिणा 'आशा नाम नदी'त्यादिपद्येन आशाया भयङ्करता संकेतिता। इत्थमाशाया विषये कविभिश्चिन्तकैश्च परस्परं विरुद्धा विविधविचाराः प्रस्तुताः।

अहं तु विश्वसिमि यद् आशा मनुष्यस्य जीवने महदुपकरोति। इयमाशा महात्मसु, दुरात्मसु, नेतृषु, श्रमिकेषु, शत्रुमित्रतटस्थेषु, व्याप्तास्ति। इयं विश्वव्यापिनी शक्तिः। अनया सम्मोहितं जगत्। अत एव द्विशतप्रायाभिरार्याभिः/ गीतिभिः/ उपगीतिभिर्मया आर्याद्विशतीत्यस्मिन् मुक्तकसङ्ग्रहके आशा स्तुता।

इयमाशा आजीवनं मे सखी तिष्ठेत्। 2008तः 2012 यावत् एतासामार्याणां रचना यदा कदा जाता। अतः क्रम संयोजने यदि काचित् त्रुटिर्दृश्येत्तदा स्वरुच्या क्रमं संयोज्य पूर्वापरसम्बन्धनिरपेक्षा एता आर्याः सहृदयैः पठितुं शक्यन्ते। प्रायः सर्वा आर्या मुक्तकान्येव। क्वचिद् युग्मकरूपेणामि एतासां संयोजनं दृश्येत्। अन्ते च-

आशेयं पूर्णा स्यात्
'सर्वे सर्वत्र सुखिनः स्युः।
सर्वे निरामयाः स्युः
सदा समेषां शुभं भूयात्॥

०१.०१.२०१२

रमालयः, आर-६, वाणीविहारः
नईदिल्ली-११००५९

( रमाकान्त शुक्लः )

# आशा

(१)

आशाबन्धः कुसुमसदृशं
प्रायशो ह्यङ्गनानां
सद्यःपातप्रणयि हृदयं
विप्रयोगे रुणद्धि ॥
(कविकुलगुरुकालिदासकृतमेघदूते/१०)

(२)

गरुअं पि विरहदुःखं
आसाबन्धो सहावेदि ॥
(गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥)
(कविकुलगुरुकालिदासकृतेभिज्ञानशाकुन्तले ४/१६)

(३)

आशा की है अमित महिमा,
धन्य है दिव्य आशा ।
जो छूते ही मृतक बनते,
प्राणियों को जिलाती ॥
(महाकवि-अयोध्यासिंह-उपाध्याय-'हरिऔध'कृत-प्रियप्रवासे)

(४)

आशा विश्वास सुसंबल-
सज्जित, कायरता तजकर।
उठ कर्मवीर बन अर्जुन!
निज यश से कर जग अर्जुन॥
('कविरत्न' श्रीब्रह्मानन्दशुक्लकृते 'उद्बोधन'काव्ये)

रमाकान्तशुक्लप्रणीता

# आशा-द्विशती

(१)

आशे! ते महिमानं

कः शक्तः पूर्णतो गातुम्।

ब्रह्मा हरिर्हरो वा

शेषो वा शारदा वापि॥

(२)

जने जने त्वं व्याप्ता

कणे कणे त्वं निलीनासि।

सत्यं शिवं विधत्से

सुन्दरमथ यं जनं वृणुषे॥

(३)

नास्तेऽलङ्कारो मे

वाचामास्ते तथा न गुणः।

आशां तथापि कुर्वे

तव गुणगानस्य मन्दमतिः॥

(४)

नास्ते परीक्ष्यवादी
यस्त्वां दुःखं परं मनुते।
आशे! सुखं परं वै
त्वमेव जगतोऽवलम्बनमसि।।

(५)

अथ कतिपयैर्वचोभि-
र्दृष्टान्तैः कैश्चिदप्याशे।
तव महिमानं गातुं
प्रवृत्त एषोऽस्मि सञ्जातः।।

(६)

स्खलनं जनस्वभावो
यद्यनुचितमत्र किञ्चित् स्यात्।
तस्य कृते क्षन्तव्य-
स्त्वयाहमाशे महोदारे।।

(७)

सम्बोध्या क्वापि भवेः
क्वापि च कर्त्री प्रथमपुरुषे।
एवं विविधैः रूपै-
स्तव महिमाविर्भवत्यग्रे।।

(८)

आर्या वा गीर्तिवा
मात्रावृत्तं प्रयुज्यतेऽत्र मया।
यस्या लक्षणमाप्यं
कस्मिन्नपि लक्षणग्रन्थे॥

(९)

आशावाद्यहमासे
तत्प्रेरणया सुचारु जीवामि।
नैवापयातु सा मे
हृदयात् सञ्जीवनी शक्तिः॥

(१०)

लक्ष्यसुकल्पनमाशा
तामनुसृत्यैव जायते यत्नः।
प्रथमं तु योजना स्यात्
क्रियान्वयो भवति तत्पश्चात्॥

(११)

आशा मरणासन्नं
पुरुषं स्पृष्ट्वा जिजीविषुं कुरुते।
किंकर्तव्यविमूढं
लक्ष्याप्त्यै प्रेरयत्याशा॥

(१२)

अन्धं तमो निराशा,
दिनमणिराशा जगद्धर्त्री।
यत्रालोकं विकिरति
तत्रोल्लासो नरीनृत्यति।।

(१३)

आशा धन्वनि मधुरं
जलं पिपासाहरं भवति।
आशा महासमुद्रे
पतितस्य कृते भवति पोतः।।

(१४)

'आशा परमं दुःखं'
भणितं येनास्ति नो स सुविवेकी।
नीरसजीवनभारं
निराशलोका वहन्ति पृष्ठेन।।

(१५)

गिरिलङ्घनमतिकठिनं
यदा विजानाति पर्वतारोही।
आशा तदा तदीयां
द्रढयत्युत्साहभावनां त्वरितम्।।

( १६ )

'आगच्छत्यागच्छ-

न्नास्ते प्रेयान् ममायास्यति।'

इत्याशया विरहिणी

नीरसरजनीं नयत्यखिलाम्॥

( १७ )

'सर्वोऽपि जनो यस्मिन्

कार्यरतः स्वावलम्बी स्यात्।

कालः स नूनमाया-

स्यत्या' शेयं सदा जयति॥

( १८ )

'अहमेव प्राथम्यं

स्पर्धायां धावनस्य लप्स्ये वै।'

क्रीडाङ्गणे प्रधाव-

त्याशाकान्ताप्रचोदितो युवकः॥

( १९ )

'द्रष्टुं मामागच्छति

सुरूपयुवकोऽद्य स्वीकरोतु स माम्'।

इत्याशयाद्य सज्जा

वरार्थिनी स्वेष्टदेवतां स्तौति॥

( २० )

'भण भो गणक! कदा मे
प्रेयान् गृह्णाति मे पाणिम्?'
'अग्रिमवर्षे' श्रुत्वो-
त्तरमाशापूरिता बाला॥

( २१ )

'जन्मदिनं मम सम्मा-
नयितुं दूरादुपैति मे कान्तः।'
इत्याशयाद्य तरुणी
मुदिता मुदिता भ्रमति गेहे॥

( २२ )

'जाने, पराजितोऽहं
पूर्वं निर्वाचने स्वचरितेन।
आयत्यां विजयी स्याम्'
नेतारं प्रेरयत्याशा॥

( २३ )

'अनधिकृता नो वसति-
र्निर्वाचन आगते नूनम्।
स्यादधिकृते' ति चित्ते
लोका आशां सुपुष्णन्ति॥

( २४ )

'देशो मे स्वातन्त्र्यं
प्राप्स्यति नूनं बलिप्रदानेन।'
इत्याशया हुतात्मा
मृत्योः पाशं गले धृतवान्॥

( २५ )

'मम मृत्युदण्ड आजीवन-
कारावासदण्डतामेष्यति।'
इत्याशयापराधी कारा-
कष्टं मुदा सहते॥

( २६ )

'क्रोडे क्रीडिष्यति मे
स्तनन्धयः पूरिते काले।'
इत्याशया प्रसूः स्वं
गर्भं पालयति नव मासान्॥

( २७ )

'विद्यालये पठित्वा
योग्यः सन् लप्स्यते वृत्तिम्।'
इत्याशया पिता स्वं
पुत्रं विद्यालयं नयति॥

( २८ )

'दास्यत्ययं मुखाग्निं

मेऽन्त्येष्ट्यां दुर्विनीतोऽपि।'

इत्याशयास्य सहते

सुतस्य जनकः कुचरितानि॥

( २९ )

'काश्यां मरणान्मुक्ति-

र्मे भविते' त्याशया रोगी।

मरणोत्सवं स्वकीयं

द्रष्टुं गङ्गातटे वसति॥

( ३० )

'अशरणशरणो भगवान्

मयि करुणां स्वां विधास्यती'त्याशा।

त्यक्ताशेषपरिग्रह-

मिमं जनं योजयति भक्त्याम्॥

( ३१ )

'श्रीवेङ्कटेशदर्शनमाप्त्वा

सौख्यं प्रपद्येऽहम्।'

इत्याशयैव भक्तो दीर्घा-

ध्वानं विलङ्घयति॥

( ३२ )

‘लप्स्यामहेऽतिपुण्यं

माघे गङ्गाजले स्नात्वा।’

इत्याशयातिशैत्ये

व्रजन्ति कुम्भे जनाः स्नातुम्॥

( ३३ )

दिगम्बराः श्रमणा अपि

तपन्ति घोरं तपोऽविरतम्।

कैवल्याशापूरित-

चित्ता गिरितुङ्गशृङ्गेषु॥

( ३४ )

यश्च निराशीर्यतचि-

त्तात्मास्ते कोऽपि लोकेऽस्मिन्।

सोऽपि परेशावाप्ते-

राशां नो त्यजति मुनिकल्पः॥

( ३५ )

‘कुसुमलता निष्पत्रा

कण्टकिनी नीरसा हन्त!

कदापि सरसा भविते-’

त्याशाश्वासयति रोलम्बम्॥

( ३६ )

आत्मघातमिह कर्तुं
सज्जीभूतं जनं निवारयितुम्।
धृत्वा किमपि सुरूपं
द्रागेवाविर्भवत्याशा॥

( ३७ )

'आशा बलवत्यास्ते'
व्यासोक्तमिदं वचोऽवधार्य वै।
नैराश्यं कूहास्ते
तद्भञ्जकरविरिहास्त्याशा॥

( ३८ )

'वर्ष्मणि वार्धक्यं ते!'
'का हानिस्तेन मे भवति?
अहमुपदेष्टा नृणां
जातोऽहं न त्यजाम्याशाम्'॥

( ३९ )

'आशा नाम नदी'ति
प्रोक्ता हरिणा, भवति सत्यम्।
किन्तु न तस्याः पारं
कोऽपि जनो जगति यातोऽस्ति॥

( ४० )

अथ यद्याशासरितः
पारं कोऽपीह गच्छति महायोगी।
अलौकिकः सोऽस्ति जनो
लोकेनास्ते न तस्य सम्बन्धः॥

( ४१ )

आशापाशशतैर्ये
बद्धा नैवासते लोकाः।
लक्ष्यभ्रष्टा इव ते
कर्तुं नो किमपि वाञ्छन्ति॥

( ४२ )

यो जायते हताशो
जिजीविषा तस्य जायते क्षीणा।
यो जायते निराशस्त-
स्योत्साहोऽपि तं त्यजति॥

( ४३ )

दृष्ट्वा ज्वालामुखिनः
स्फोटं भूकम्पताण्डवं दृष्ट्वा।
वह्नि-सुनामी-झञ्झो-
त्पातं दृष्ट्वापि नो बिभेत्याशा॥

( ४४ )

सृष्टिस्थितिलयचक्रं
सदातनं भ्रामयत्याशा।
सैवास्ते प्रभुमाया
सैवास्ते जीवनालम्बः॥

( ४५ )

'वर्षचतुर्दशकालं
नीत्वा विपिने ससीतसौमित्रिः।
आयास्यति मे तनयो
रामोऽयोध्यां यथाकालम्'॥

( ४६ )

इत्याशयैव जीवति
कौसल्या पतिविहीनापि।
साकं सुमित्रयाथो
कैकेय्या तत्सुताभ्याञ्च॥ ( युग्मकम् )

( ४७ )

'दुःशासनस्य रुधिरं
पास्यति भीमो यथाप्रतिज्ञातम्।'
इत्याशयापमानं
पीत्वा कालं नयति कृष्णा॥

( ४८ )

‘नूनमयं जीविष्यति
दिव्या वाग्भणितवत्येवम्।’
पुण्डरीक-जीवातोराशां
कुरुते महाश्वेता॥

( ४९ )

कृच्छ्रं तपो विधेयं
प्रेत्यानन्तं सुखं भवेद्येन।
क्षुद्रान् कामांस्त्यक्त्वा
तपति तपो ब्राह्मणः कृच्छ्रम्॥

( ५० )

‘परलोको मे भवतात्
सुखपूर्णः क्लेशलेशरहितश्च।’
इत्याशया तपस्वी
त्यजति समान् लौकिकान् कामान्॥

( ५१ )

‘अजरामरवद्विद्यो-
पासननिष्ठो लसिष्यामि।’
इत्याशया स्वगेहे
ग्रन्थान् विविधांश्चिनोत्ययं प्राज्ञः॥

(५२)

'वार्धक्ये मम रचना
स्वान्तःसुखदायिनी भविता।'
इत्याशया कविः स्वां
कवितां ध्वन्यङ्किंतां कुरुते॥

(५३)

'कश्चिच्छ्रोष्यति काव्यं
मदुपज्ञं सहृदयश्रेष्ठः।'
इत्याशयैव रचयति
निर्णिद्रः सन् कविः काव्यम्॥

(५४)

'मय्युपरतेऽपि कश्चि-
त्त्ववश्यमेषां फलानि खादिष्यति।'
इत्याशयैव वृद्धः
खर्जूरान् रोपयति विज्ञः॥

(५५)

'वर्षायास्यति काले
क्षेत्रेष्वन्नं भवेत्प्रचुरम्।'
इत्याशया निदाघं
सहते कृषकः सपरिवारः॥

(५६)

'मम पितरौ मे भोजन-
मानेतुं प्रातरेव गतवन्तौ।
यथासमयमायास्यत'
आशेयं खगसुतं हि पुष्णाति॥

(५७)

'अद्यालम्भ्यपमानं
हन्त विपश्चित्सभामध्ये।
सम्मानो मे भविता
भूयोऽपी'यं जयत्याशा॥

(५८)

'साक्षात्कारो भवति,
प्रस्थास्ये तत्कृते श्वोऽहम्।
अहं नियुक्तो भवितास्मी'
त्याशा कं करोति न स्फूर्तम्॥

(५९)

'मम चयनं नो जातं,
का हानिस्तेन मे जाता।
भाविनि साक्षात्कारे स्यां
सफलो' जयति युवकाशा॥

(६०)

'धार्ष्ट्यं चरन्नयं स्यात्

प्रतिवेशी मे कदापि भद्रजनः।'

इत्याशयास्य सहते

पार्श्वनिवासी कुटिलचेष्टाः॥13॥

(६१)

'मम देहे मधुमेहे

नैव भवेच्छर्करावृद्धिः।'

इत्याशयैव रोगी

स्वादुमधुव्यञ्जनान्यसौ त्यजति॥14॥

(६२)

सूर्यस्याशां कुरुते पृथिवी

तस्याश्च चन्द्रोऽयम्।

तारा ग्रहांस्तथोल्का

ब्रह्माण्डे भ्रामयत्याशा॥15॥

(६३)

'नैराश्यं परमसुखं'

यदि मनुषे, ब्रूहि तन्मे त्वम्।

किं 'नैराश्य' - पदेऽपि न

विलसत्याशा हसन्तीव॥16॥

(६४)

बाला वा स्यात्तरुणी
प्रौढा वृद्धाथवास्त्वाशा।
रञ्जयति मनो ध्यातुः
स्मितवदनाकर्षणेन युता।।

(६५)

धर्मार्थकाममोक्ष-
प्राप्तेराशास्ति किं त्याज्या?
किमु पुरुषार्थैर्हीनः
कोऽपि जनः पूर्णतां याति।।

(६६)

त्यजतु दुराशामथवा
त्यजतु निराशां कदाशां वा।
त्यजतु कदापि सदाशां
नरो न भद्रं यदीच्छति सः।।

(६७)

जयतीयं खल्वाशा
देशजनानां मनस्सु जागरिता।
'सौराज्यमथ समृद्धिः
राष्ट्रेऽस्मिन् सर्वदैव स्यात्'।।

( ६८ )

‘कलहं कृत्वा यातः

कार्यालयमद्य मे पतिः प्रातः।

अनुनेष्यति मां सायं’

पत्न्या आशा जयतु सेयम्॥

( ६९ )

जयतादियमप्याशा

‘कार्यपरः स्यात्समोऽपि सर्वत्र।

दिवसे श्रमव्रती स्यात्,

प्रातः सायं च भोजनं लभताम्’॥

( ७० )

इयमप्याशा जयताद्

‘भवतात् काले जगति वृष्टिः।

प्रभूतमन्नं दुग्धं

विद्युच्छक्तिश्च येन स्यात्’॥

( ७१ )

इयमथ जयतादाशा

‘सर्वे शिक्षापरीताः स्युः

सर्वे स्वस्थाः सन्तः

सेवन्तां विश्वरूपेशम्’॥

( ७२ )

‘आशाधृतमस्ति जगत्’

लोकोक्तिरियं जयति लोके।

‘तत्राशास्ते यत्र

श्वासोऽ’थाभाणको जयति॥

( ७३ )

इयमेवाशा नाट्ये

प्राप्त्याशारूपमाधत्ते।

सैवाग्रे नियताप्तिः

फलागमश्चाप्यथो भवति॥

( ७४ )

‘यक्ष्येऽहं यदि, मयका

स्वर्गो लभ्यस्तदा नूनम्।

इयमाशा मीमांसा-

शास्त्रे यज्ञस्य कारणं भवति॥

( ७५ )

‘दुःखत्रयाभिघातो

व्यक्ताव्यक्तज्ञविज्ञानात्’।

इत्याशयैव सांख्यं

मर्त्यो व्यवहृतिपथे नयति॥

( ७६ )

'मायाजीवब्रह्म-

ज्ञानान्मोक्षोऽस्तु मे नूनम्'।

इत्याशयैव वेदा-

न्त्यनुभववाक्यं समाश्रयते॥

( ७७ )

'चित्तस्य वृत्तयो मे

योगेन निरोधमाप्स्यन्ति।'

इत्याशा युञ्जानं

योगसृतिं रोद्धुमीरयति॥

( ७८ )

'स्थितिरियमास्ते ब्राह्मी

स्थित्वास्यामन्तकालेऽपि।

ब्रह्मपदं प्राप्स्यामी'

त्याशेरयति स्थितप्रज्ञम्॥

( ७९ )

सन्ध्याकर्मणि सूर्यो-

पस्थानमनुः किमाशा नो।

'जीवेम वयं शरदः

शतं च पश्येम शृणुयाम'॥

(८०)

आशा तृष्णा वा स्यात्
भवेत् पिपासा स्पृहा वापि।
अनया विना तु जीवन-
मास्ते निर्लक्ष्यमथ रुद्धम्॥

(८१)

शतकमथो साहस्त्री
नो शक्ता गुणगणाख्याने।
आशाया, इयमास्ते-
ऽनादिरनन्ताप्रमेया च॥

(८२)

'इह जन्मनि यन्नाप्तं
भाविनि जन्मनि भवेत् प्राप्यम्।'
इत्याशयैव जीवो
नाना योनिषु परिभ्रमति॥

(८३)

जह्यां धनागमाशा-
मथ जह्यां जीवनस्याशाम्।
किन्तु प्रभोरकारण-
करुणाशां वद कथं जह्याम्॥

(८४)

'दधिभाण्डं भेत्स्यामो
नूनं जन्माष्टमीदिवसे।'
गोविन्दा इत्याशा-
भरिता स्तूपं विनिर्मान्ति॥

(८५)

'दधिघटभञ्जनखेला-
स्पर्धायां नो जयो भविता।'
आशासाना गोप्यो
मुम्बापुर्यां विलोक्यन्ते॥

(८६)

'अस्माकं सन्ततयो
दास्यन्ति जलाञ्जलिं श्राद्धे।
अस्मभ्यं' पितर इमा-
माशां न परित्यजन्ति पितृलोके॥

(८७)

'परमेशो मयि करुणां
विधास्यती'त्याशया पूर्णः।
निष्कामः सन् भक्तः
सर्वान् कामान् परित्यजति॥

(८८)

यद्याशया विहीनं
जगदिदमास्तां तदा भ्रातः!
संसारचक्रमेव
स्थगितं स्यान्नीरसं च स्यात्॥

(८९)

'आशाधृतमिदमास्ते
जगदि' त्याभाणकोऽन्वर्थः।
आशाविहीनजनता
प्रविशत्यन्धं तमो दीना॥

(९०)

आशैवास्त्यवलम्बन-
मिह लोके कालयापनस्य परम्।
आशां विना तु लोको
निष्क्रिय इव जायते नूनम्॥

(९१)

'मम पुत्रोऽयं मूर्खः
स्यादेव कदाचन प्राज्ञः।'
इत्याशयास्य पित्रा
क्रियते कस्को न वा यत्नः?॥

(१२)

'बसयानं गृह्णामी'

त्याशापूरितमना दिल्ल्याम्।

धावत्यनुबसयानं

तरुण इवायं नरो वृद्धः।।

(१३)

शुक्ला वा स्यात् कृष्णा

वा स्यादभिसारिका युवतिः।

प्रियमिलनाशापूरित-

चित्ता गणयति न सृतिकष्टम्।।

(१४)

अङ्गं गलितं पलितं

मुण्डं च मुखं दशनहीनम्।

भैक्ष्याशयैष नूनं

वनीयको यापयति कालम्।।

(१५)

'मम कविता वा लेखो

नूनं पत्रे प्रकाशितो भविता।'

इत्याशया कविस्तं

सम्पादकपार्श्वमापयति।।

(९६)

‘अन्त्येष्टिं मे कुर्यात्-
स्वयमागत्येह शङ्करो नूनम्।’
इत्याशयास्य माता
संन्यासायानुमनुते तम्॥

(९७)

विकचं कुसुमं दूरे
मकरन्दपरागसंवलितम्।
तन्मधुपानस्याशा
रोलम्बं धावयति तूर्णम्॥

(९८)

‘वेतनवृद्धिर्नः स्यादि’
त्याशापूर्णमानसाः श्रमिकाः।
कार्यावरोधघोषं
कृत्वा वेष्टनसृतिं समुपयान्ति॥

(९९)

आशा दुरत्ययास्ते
तस्याः पारं न कोऽपि याति यतिः।
शून्ये स्थित्वापि यमी
मोक्षाशां नो परित्यजति॥52॥

(१००)

तृष्णा स्पृहा पिपासा

कोशे चाशासमार्थकाः प्रोक्ताः।

किन्त्वाशाव्युत्पत्ति-

र्व्याप्त्यर्थकधातुतो जाता॥

(१०१)

स्वादिगणीयो धातुः

पाणिनिना सम्मतो ह्यशू व्याप्तौ।

तस्मादाशा सिद्धा,

सा विश्वं व्याप्य जयति सदा॥

(१०२)

यथा व्यापको विष्णु-

र्लोकत्रितये तथैवाशा।

व्याप्येदं ब्रह्माण्डं

दुरत्यया जयति दुस्त्याज्या॥

(१०३)

'जीवनपर्यायः किम्?

अग्रेसरणस्य कास्ति परिभाषा?'

प्रश्नस्योत्तर'माशा'

द्विशब्दसिद्धं जयति लोके॥

( १०४ )

'मूढ जहीहि धनागम-

तृष्णा'मिति वाक् प्रभाषितुं सरला।

किन्तु व्यवहर्तुमियं

कठिनास्तेऽसम्भवा चास्ते।।

( १०५ )

को नाशासंस्पृष्टः

संन्यासी वा गृही योगी?।

निःस्वो वा सधनो वा

बालो युवकोऽथवा वृद्धः।।

( १०६ )

आशा कस्यापीयं

ज्ञानावाप्तेर्भवति लोके।

भक्त्यावाप्तेः कर्मा-

वाप्तेर्वा कस्यचिद् भवति।।

( १०७ )

कस्यापि यशोऽवाप्ते-

राशा भवतीह संसारे।

जीवनमुक्तेरथवा

निर्वाणस्यास्ति कस्यचिच्चाशा।।

(१०८)

'प्रतिपक्षिण: प्रशासन-
मुच्छिन्नं शीघ्रमेव भवेत्।'
इत्याशया विरोधी-
नेता जनतासभां कुरुते।।

(१०९)

आशैकस्या नेत्र्या:
'प्रधानमन्त्री त्वहं भविष्यामि।'
आशेयं यदि भग्ना
तदा तु कष्टं भवेत्तस्या:।।

(११०)

क्षुद्राणां कामानां
पूर्तेराशा न कर्तव्या।
किन्तूदात्तोद्देश्य-
प्राप्तेराशा तु करणीया।।

(१११)

शकुन्तलाशासाना
पतियोगं काश्यपाश्रमभुवि।
परिधूसरे वसाना
वसने विरहव्रतं धत्ते।।

( ११२ )

पतिराशा पत्न्याशा

माताशा जनक आशास्ते।

सन्तानमथो मित्रं

ह्याशारूपं जगत्सर्वम्॥

( ११३ )

मनसि सदा सुसमाधिनि

उदेत्युषेव स्मितास्याशा।

आशाभङ्गे सकलं

जीर्णारण्यं जगद्भवति॥

( ११४ )

तुलसीदासस्याशा

रामोऽस्तीत्येव तेन कथितं वै।

मीराया आशास्ते

गिरिधरगोपालनागरः कृष्णः॥

( ११५ )

बुभुक्षितस्याशास्ते

भोजनमुदरप्रपूर्तये यत्स्यात्।

नग्नस्य वस्त्रमास्ते

वासविहीनस्य गृहमाशा॥

( ११६ )

तीर्थयात्रिणामाशा
पूर्णा स्यात्तीर्थयात्रायाम्।
ध्यानस्थस्याशेयं
'लयो भवतु मे ऽ प्रमेयेशे।।

( ११७ )

'धर्मयात्रया मे स्यात्
कल्याणं किञ्च सन्तुष्टिः।'
इत्याशया सहन्ते
लोका मार्गस्य कष्टानि।।

( ११८ )

'युगलं मे स्यात् सिद्धम्'
इत्याशापूरितानि सत्त्वानि।
वनाब्धिगिरिमरुभूमिषु
'डिस्कवरीचैनले' पश्य।।

( ११९ )

'क्रेष्यति फलानि दत्वा
मूल्यमनल्पं गृहस्वामी।
गृहपति' रित्याशास्ते
फलविक्रेता गृहस्य पुरतो वै।।

( १२० )

‘पादत्राणे धृत्वा

पदयोर्धूल्याथ धूसरिते।

आयास्यति मम पार्श्वं’

कोऽप्याशास्ते हि चर्मकरः॥

( १२१ )

‘ग्रीष्मे भीष्मे पास्यति

जनो घटस्थं जलं शीतम्।’

इत्याशया कुलाल-

स्तापयति घटाननलगर्ते॥

( १२२ )

‘आयास्यत्यपराधी

कश्चित्प्रतिभूति-कार्यार्थम्।’

धर्मकञ्चुकं श्यामं

धृत्वायं प्राड्विवाक आशास्ते॥

( १२३ )

इयं च रूपाजीवा

तिष्ठन्ती स्वीयगृहवलभौ।

आशास्ते ह्यागमनं

ग्राहकतरुणस्य धनदस्य॥

(१२४)

गृहनिर्माणश्रमिका
आशायां वृत्तिलाभस्य।
तिष्ठन्ति राजमार्गे
वर्तनदातुः प्रतीक्षायाम्॥

(१२५)

'उत्पत्स्यतेऽत्र कश्चित्-
समानधर्मा ममायत्याम्।'
इत्याशया विरचयति
भवभूतिः स्वाभिमतकाव्यम्॥

(१२६)

'आयास्यति मम देशे
विदेशमुद्राहमहमिकया।'
कौमनवेल्थक्रीडा
आयोज्यन्तेऽनयाशयापि सखे॥

(१२७)

'वर्धिष्यते प्रतिष्ठा
क्रीडास्पर्धा-सुयोजनेन देशस्य'।
इत्याशयापि योजक
इच्छति साफल्यमेतासाम्॥

(१२८)

'कौमनवेल्थक्रीडाः

निष्प्रत्यूहं समाप्तिमेष्यन्ति।'

इत्याशैकं मन्त्रिण-

मीरयति पदप्रतिष्ठार्थम्॥

(१२९)

क्रीडामन्त्र्याशास्ते

विना विरोधं समाप्ताः स्युः।

राष्ट्रकुलक्रीडा या

विज्ञाप्यन्ते सकलविश्वे॥

(१३०)

'राष्ट्रकुलक्रीडायाः

साफल्यं नैव भविते'ति।

आशेयमपरमन्त्रि-

प्रवरमनसि हन्त ! जागर्ति ॥

(१३१)

मनमोहनसिंहस्या-

शास्ते यद्राष्ट्रकुलखेलाः।

सफलतया सम्पन्नाः

स्युर्दिल्लीराजधानीभुवि॥

( १३२ )

'अस्मद्देशो लभतां
क्रीडास्पर्धासु नैकासु।
महारजत-पदकानी'
त्याशास्ते देशजनतायाः॥

( १३३ )

द्वयोर्मन्त्रिणोः सम्प्रति
अहिनकुलं दृश्यते देशे।
अनयोरेकतरस्यै-
वाशापूर्तिर्भवेद्बन्धो॥

( १३४ )

राष्ट्रकुलक्रीडानां
समापने सफलतापूर्वम्।
जाते दिल्ल्यां भग्ना-
न्यतरामात्यस्य हन्ताशा ॥

( १३५ )

परिवारप्रमुखस्या-
शास्ते यन्मे कुटुम्बस्य।
सर्वे सम्मिल्य जनाः
कुर्युः प्रगतिं प्रतिष्ठां च॥

(१३६)

ग्रीष्मे भीष्मे गवया
यूथं निर्माय दूरमभियान्ति।
आशासाना 'लभ्यं
क्वचित्तडागे पयोऽस्माभिः'।।

(१३७)

सिंहा मृगाः करीन्द्राः
भल्लूकाः शूकरा महिषाः।
पानीयं जलमाप्तुं
विपिने भ्राम्यन्ति बद्धाशाः।।

(१३८)

आषाढस्य प्रथमे
दिवसे गर्जत्ययं मेघः।
कर्षण-बीजवपनयो-
राशां कुरुते कृती कृषकः।।

(१३९)

'अन्तर्वर्त्नी धेनुः
प्रसूय वत्सं यथाकालम्।
मम पुत्रार्थं दास्यति
पयो'जयति मातुराशेयम्।।

( १४० )

पारावतदम्पत्यो-
राशेयं स्याच्चिरञ्जयिनी।
अस्मत्पोतो गगने
समयेनोत्पततु वर्धितो भूत्वा॥

( १४१ )

विडालिकाया आशा
'मूषिकलब्धिर्भवेन्मह्यम्'।
श्येनस्याशास्तीयं
'पक्षी लभ्यो मया भुक्त्यै'॥

( १४२ )

पुरोहितानामाशा
'यजमानानां समृद्धिः स्यात्।
बहु देयमस्तु तेषां
योगक्षेमं चलतु येन'॥

( १४३ )

ग्रन्थिभेदकानामिय-
माशास्ते 'यात्रिणः सर्वे।
पुष्कलधनं गृहीत्वा
गृहाच्चलेयुः स्वयात्रार्थम्'॥

(१४४)

भिक्षूणामियमाशा

'भैक्ष्यं लभ्येत नः प्रचुरम्।'

आशेयमातुराणां

'स्वास्थ्यं संलभ्यमस्माभिः'॥

(१४५)

आशास्यते सुगुरुभिः

'परिणामः स्यात्परीक्षायाः।

एवम्भूतो यत्र

श्रेष्ठोऽस्मच्छिष्य एव स्यात्'॥

(१४६)

'सम्पूर्णा दिल्लीयं

ममैव बसयानमारोहतु।'

संवाहक आशास्ते

'ब्लू' बसयानस्य यात्रिरिपुः॥

(१४७)

अध्यापकस्य चाशा

सच्छिष्योऽस्तीति मन्येऽहम्।

शिष्याणामाशास्ते

सद्गुरुरित्यत्र नास्ति सन्देहः॥

( १४८ )

लेहे मेघविदारण-

जन्यजलप्लावने जाते।

जीवितबालव्याजात्

जयति जयति जीवितस्याशा॥

( १४९ )

भूकम्पजन्यमृत्यो-

स्ताण्डवमपि तर्जयत्याशा।

साहाय्यकर्मकृद्भिः

स्थाप्यन्तेऽनाश्रिता लोकाः॥

( १५० )

नियतिकृते संसारे

परमं दुःखं भवत्वाशा।

कविरचिते संसारे

परमसुखं नित्यमियमाशा॥

( १५१ )

मार्गे प्रसूय पुत्रीं

माता तु मृता, परं पुत्री।

जीवत्यनाथनिलये

स्वस्था, जय जीवनाशे त्वम्॥

( १५२ )

'मम नास्ते काप्याशा
त्यक्ष्याम्यधुना सुखेन मे प्राणान्।'
अत्राप्याशा दुःखाद्
ऋते स्थिता प्राणमोक्षस्य॥

( १५३ )

'न कामयेऽहं राज्यं
न स्वर्गं नापुनर्भवं किन्तु।
आर्तजनानामार्ति-
र्नश्यत्वे'षा जयत्वाशा॥

( १५४ )

'नहि किञ्चिदहं याचे
किन्तु दिदृक्षे पदं शैवम्।'
अप्पयदीक्षितकथने
नास्त्याशा किं समुल्लसिता?

( १५५ )

धृतषोडशशृङ्गारा
मुकुराग्रे या स्थिता तन्वी।
तस्या आशास्ते किल
दयितो धावन् गृहं प्राप्तः॥

(१५६)

'पुत्राच्छिष्याद्वा स्यात्
पराजयो मे सभामध्ये।'
पितुर्गुरोर्वा जयता-
दियमाशोदारचित्तस्य॥

(१५७)

आशेयं जयिनी स्यात्
'हिंसां जेष्यत्यहिंसैव।
जेष्यत्यभावसङ्घं
नित्यसमृद्धिः सकलविश्वे॥'

(१५८)

आशेयं जयिनी स्या-
न्निरागसां स्यान्न संहारः।
आशेयं जयिनी स्या-
न्न वृत्तिहीनो भवेत्कोऽपि॥

(१५९)

सम्पूर्णजीवनेऽथो
सत्यश्रमपरहितादिभिः सततम्।
परलोकनिर्मितेर-
प्याशा कथमिव परित्याज्या॥

(१६०)

यदि च कुसङ्गं त्यजसि न,
पूज्यानां त्वमपमानमथ कुरुषे।
बन्धो त्वया कदाचन
कुशलस्याशा न कर्तव्या॥

(१६१)

'आमृत्योः श्रियमिच्छेत्
नैनां मन्येत दुर्लभां मनुजः।'
इयमुक्तिः किं कथयति?
'आशास्ते मूलमुन्नत्याः'॥

(१६२)

दुर्व्यसनेषु पतित्वा
स्वास्थ्यं यदि नाशयिष्यसि रे!
प्रभुरेव रक्षकस्ते
कः कुर्यात्तव शिवस्याशाम्॥

(१६३)

'सर्पे वा हारे वा
सुहृदि रिपौ वा मणौ लोष्टे।
समदृष्टेर्मम दिवसा
यान्त्वि'त्यत्रास्ति किं नाशा?॥

(१६४)

'अमरसरित्स्यात्तटिनी
देवोऽपि स्यान्महादेवः।
वटविटपो दयिता स्या-
द'त्रापि न किं लसत्याशा।।

(१६५)

मोघाशा नो कार्या-
ऽमोघा कार्या सदैवाशा।
पौरुषमपरिज्ञाय
त्वया न कार्या कदाप्याशा।।

(१६६)

आशाभावेऽधीति-
र्भरणं पुष्टिस्तथा स्वास्थ्यम्।
उन्नतिरुल्लासो वा
सर्वं व्यर्थं प्रतीयते नूनम्।।

(१६७)

आशासद्भावे सति
दारिद्र्यं रुग्णता तथाभावः।
दैन्यमुपेक्षा जडता
सर्वं रमणीयतां याति।।

( १६८ )

आशे! त्वां खलु वच्मि

त्याज्योऽहं नो त्वयास्मि ते प्रणयी।

त्यक्तस्त्वया यदि स्यां

निर्जीवोऽहं भविष्यामि॥

( १६९ )

जयतान्ममेयमाशा

'देशे सर्वः सुखी स्यान्ना।

सर्वो निरामयः स्यात्

सर्वः पश्येत्तथा भद्रम्'॥

( १७० )

आशेयं किल जयतात्

'वसुधैव कुटुम्बकं समेषां स्यात्।

शोषणहीनमदीनं

सुखशान्तिमयं जगद् भवतात्॥'

( १७१ )

अत इदमुचितं नास्ते

कथनं- 'दुःखस्य कारणं ह्याशा'।

कर्म ज्ञानं भक्तिः

सर्वेषां मूलमस्त्याशा॥

( १७२ )

आशा बन्धो वा स्या-
दाशा पाशोऽथवा भवतात्।
आस्तामाशा वायु
र्वाशास्ते जीवनालम्बः॥

( १७३ )

विफलीभूतैश्छात्रैः
कदापि हेयास्ति नैवाशा।
आगामिनी परीक्षा
तेभ्यो दास्यति समधिकाङ्कान्॥

( १७४ )

ईश्वरकरुणावाप्ते-
राशा त्याज्या न मनुजेन।
आशा नो हातव्या
स्वोत्कर्षस्याथ केनापि॥

( १७५ )

क्षुद्राणामिच्छानां
पूर्तेराशा न कर्तव्या।
किन्तु शुभोदर्कस्य
प्राप्तेराशा विधेयैव॥

( १७६ )

आशा स्पृशति जनं यं
स हि मनुजः सुन्दरो भवति।
आशा त्यजति जनं यं
तस्यास्ते जीवनं व्यर्थम्॥

( १७७ )

आशा न परमदुःखं
सुखार्जनस्यास्ति मूलमियम्।
छिन्ने मूले न स्यात्
पत्रं पुष्पं तथा च फलम्॥

( १७८ )

अहमस्म्याशावादी
सास्ते मे प्रेरणादात्री।
तिष्ठतु सदैव सा मे
हृदये सञ्जीवनी शक्तिः॥

( १७९ )

आशाभङ्गो मास्तां
कस्यापि जनस्य परमेश्वर!
याचे त्वां विनतः सन्
आशां मे त्वं प्रभो पूरय॥

(१८०)

आशा स्पृशति जनं यं
स सुन्दरीभूय राजते लोके।
आशा त्यजति जनं यं
विलुप्यते तस्य सौन्दर्यम्॥

(१८१)

आशा दासी नुः स्यात्
आशाया वास्तु दासो ना।
सम्बन्धस्त्वाशायाः
नरेण साकं भवत्येव॥

(१८२)

श्रीकालिदास-काव्ये
बाणकृतौ चान्यकविकृतिषु।
आशाया माहात्म्यं
प्रगीतमास्ते कनकवर्णैः॥

(१८३)

'एकस्मिन् दिवसे नो
सौराज्यं नूनमायास्यति।
यत्र नृहत्यापहरण-
बलात्कृतीनां विलोपः स्यात्॥

(१८४)

ओसामा बिन् लादेन्
यथा स्वगेहे स्थितो विहतः।
तथैव पापा अन्ये
ऽप्यातङ्कपरा विनङ्क्ष्यन्ति।

(१८५)

घातकरसायनैर्नो
मोचाम्रफलानि पक्ष्यन्ते।
सूचीप्रयोगपीवर-
शाका नोत्पादयिष्यन्ते॥

(१८६)

मेदोऽस्थिरसैः शुद्धं
घृतं न निर्मास्यते धूर्तैः।
दुग्धं च मनुजपेयं
न यूरियाशैम्पुरङ्गाद्यैः॥

(१८७)

वृत्तिविहीनो भवताद्
अस्मद्देशे न कोऽपि जनः।
नो रोगी नो पतितो
न वापमानित इहास्तु जनः॥'

(१८८)

इत्याशां कुर्वाणा
भारतदेशस्य नागरिकाः
चिन्ताचुम्बितचित्ताः
ग्रामे नगरेऽद्य दृश्यन्ते॥

(१८९)

'सुरसेव मूल्यवृद्धि-
र्व्यावृतवदना नियन्त्रिता भविता।
हन्त कदापी'त्याशा
लोकेभ्यः सम्बलं दत्ते॥

(१९०)

मा कुरु याच्ञां, मा भव
दीनः कस्यापि नुः पुरतः।
आशां परं त्यज त्वं
नो सत्कार्यस्य संसारे॥

(१९१)

'कृषको न कोऽपि कुर्याद्
आत्महतिं हन्त! देशेऽस्मिन्'।
इत्याशा करणीया
तदुचितयत्नाश्च करणीयाः॥

(१९२)

'पुनरायास्यति देशे
विदेशकोशस्थितं वित्तम्।'
इत्याशा नो त्याज्या
तदुचितयत्नाश्च करणीयाः॥

(१९३)

'दुर्बलघातो देशे
क्वचिदपि दृष्टौ भविष्यति नो'
इत्याशा करणीया
तदुचितयत्नाश्च करणीयाः॥

(१९४)

'त्यक्ष्यति देशे प्राणान्
नहि कोऽपि बुभुक्षया ग्रस्तः'
इत्याशा करणीया
तदुचितयत्नाश्च करणीयाः॥

(१९५)

'हठसम्भोगोदन्ता
निर्दोषानृणां तथा घाताः।
नो द्रक्ष्यन्ते देशे'
करणीयेयं सदैवाशा॥

( १९६ )

'देशे सर्वकरेभ्यः
कार्यं सुलभं भविष्यती'तीयम्।
आशावश्यं कार्या
तां पूरयितुं च यत्न आचर्यः॥

( १९७ )

श्रमिणां कर्मकराणां
कृषकाणां शिल्पिनाञ्चैव।
जीवनयापनसुविधा
निश्चित्याशा तु कर्तव्या॥

( १९८ )

त्याज्याशा देशस्य
प्रगतिविकासोन्नतीनां किम्?
विश्वस्याथो शान्ते-
राशा किं नैव कर्तव्या?

( १९९ )

त्याज्याः सर्वा आशा
इत्यस्ति मतं निवृत्तिमार्गाणाम्।
त्याज्या कदापि नाशा
प्रवृत्तिमार्गाध्वनीन-मतम्॥

(२००)

आस्ते जगदिदमीश-
स्तस्याराधनमिह विधेयम्।
जीवेषु विद्यमानः
कदाचिदीशः प्रसीदेत॥

(२०१)

कुरु सत्कर्म सदैव
प्राणन् कस्यापि नो पीडय।
परमेश्वर-करुणाया
आशां कुरु सर्वकालेषु॥ (युग्मकम्)

(२०२)

निष्कामकर्मयोगी
किं नाशासंपरीतोऽस्ति?
निःस्वार्थकर्मपूर्तेः
कुरुते किं नाप्यसावाशाम्?

(२०३)

अथ किं विचिन्त्य कुरुषे
कर्म त्वं कामनारहितम्?
निष्कार्मकर्मयोगिन्!
किं नाशास्सेऽन्तमाशानाम्?

(२०४)

आशे! मा त्यज मां त्वम्
त्वां त्यक्षामि न कदापि कर्मण्यः।
येन त्यक्ताशासौ
पुमान् भवति चेतनाशून्यः।।

(२०५)

पराजातिनामास्ते
गुणो निराशा सुतुष्टिकरः।
जिजीविषूणामाशा
गुण आस्ते स्फूर्तिसन्दाता।।

(२०६)

सामाजिकगुण आशा
कदापि तच्चक्ररोधो न।
संसरणं जगत इयं
पर्याय इयं जगत्प्रगतेः।।

(२०७)

आशेयं पूर्णा स्यात्
'सर्वे सर्वत्र सुखिनः स्युः।
सर्वे निरामयाः स्युः
सदा समेषां शुभं भूयात्।।'

( २०८ )

आशैवास्ते जीवन-
　　　　माशैवास्ते च सक्रियता।
आशैवास्ते स्फूर्ति -
　　　　नैराश्यं जीवनाभावः॥

( २०९ )

आशा जिजीविषास्ते
　　　　कर्मठता साहसं तथैवाशा।
आशा रसायनं किल
　　　　नैराश्यं त्वस्ति नीरसता॥

......

# पद्यानां वर्णानुक्रमणी

(कोष्ठकेषु पद्यसंख्या दीयते)

# काव्यप्रणेता रमाकान्तशुक्लः



**जन्मतिथिः** २४-१२-१९४० ई०
**जन्मस्थानम्** खुर्जा (उ०प्र०)
**पिता** (स्व०) श्री ब्रह्मानन्द शुक्लः
**माता** श्रीमती प्रियम्बदा शुक्ला
**शिक्षास्थले** खुर्जास्थश्रीराधाकृष्ण-संस्कृतकालेजः, एन.आर.ई.सी.कालेजश्च।
**शिक्षा** एम.ए. (हिन्दी-संस्कृतयोः) पीएच०डी० (आगरा), साहित्याचार्यः
**राष्ट्रपतिसम्मानितः संस्कृतविद्वान्**
**प्रकाशिता ग्रन्थाः**जैनाचार्य रविषेणकृत पद्मपुराण और तुलसीकृत रामचरितमानस (उ०प्र० शासनपुरस्कृतः), उत्तररामचरितप्रियम्वदाव्याख्या (सहलेखनम्)।

**प्रकाशितानि काव्यानि** भाति मे भारतम्, जय भारतभूमे (उ०प्र० संस्कृतअकादमी-पुरस्कृते काव्ये), भाति मौरीशसम् (काव्यम्), भारतजनताहम् (उ०प्र० संस्कृतसंस्थानस्य कालिदास-सम्मानेन पुरस्कृतं कवितासंकलनम्), सर्वशुक्ला (कवितासंकलनम्)

**नाट्यकृतयः** पण्डितराजीयम् (उ०प्र० संस्कृत अकादमी-पुरस्कृतं ध्वनि- नाटकम्), अभिशापम् (उ०प्र० संस्कृत अकादमी-पुरस्कृतं ध्वनिनाटकम्), द्वयोरपि मञ्चप्रस्तुतिः नैकधा जाताः । पुरश्चरणकमलम्, नाट्यसप्तकम्, (दिल्लीसंस्कृतअकादम्या अखिलभारतीयमौलिकसाहित्यरचनापुरस्कारेण सम्मानितम्) ।

**सम्पादिता ग्रन्थाः** संस्कृतसुधा, संस्कृगद्यगुच्छः, अर्वाचीनसंस्कृत-महाकाव्यविमर्शः (खण्डत्रयम्), अर्वाचीनसंस्कृत-साहित्य-परिचयः (खण्डद्वयम्), अर्वाचीनसंस्कृत-संग्रहः (खण्डत्रयम्), अर्वाचीनसंस्कृतम् (त्रैमासिकपत्रम्) १९७९ तः अद्यावधि (दिल्लीसंस्कृतअकादम्या अखिलभारतीय संस्कृतपत्रकारितासम्मानेन सभाजितम्)।

**काव्यपाठः** विदेशेषु मौरीशस-अमेरिका-इटली-यू०के० प्रभृतिषु देशेषु भारतवर्षस्य विविधराज्येषु च समायोजितेषु विविधसमारोहेषु किञ्च आकाशवाणी-दूरदर्शनयोः १९६३ तः अद्यावधि संस्कृतकाव्यपाठः कृतः। आकाशवाण्याः सर्वभाषा- कविसम्मेलने संस्कृतकविरूपेण अनुवादकर्तृकविरूपेण च सहभागिता कृता।

**साम्प्रतिकवृत्तिः** राष्ट्रियसंस्कृतसंस्थानमुख्यालये शास्त्रचूडामणिविद्वान्।

**आवासः**'रमालयः' आर-६, वाणी विहारः, नयी दिल्ली-११००५९ (भारतम्)
दूरभाषः ०११-२८५६१८४६

ISBN - 978-81-85924-12-0